N.A.
Sripanchakroshi mahatmyam
श्री पञ्चक्रोशी माहात्म्य
sanskrit
Paper - Printed
N.A. (very old)
20 folio
10"x4.5"
Complete

॥श्रीगणेशायनमः॥ ॥श्रीकपिलउवाच॥ एवंसिद्धाःकाशिकायांवसेद्यःसर्वैर्द्धर्मैः संस्तुतःसोतिवंद्यः॥ त
स्माद्धर्माःसततंसिद्धिभूमौसंसेव्याःस्युःपापकंनाल्पमत्र॥१॥येयेधर्मामानवैःसंप्रयुक्ताःकाश्यांते
तान्मोक्षसिद्धिंनयंति॥तस्मात्सिद्धिःसाधयेदात्मकार्यंसद्भिःशास्त्रैःश्रद्धयात्यागयोगैः॥२॥काश्यां
कृतानांपापानांपुण्यानांवासमृद्धयः॥भवंतिसततंनूनंस्वक्षेत्रेद्युप्तबीजवत्॥३॥सिद्धाऊचुः॥दे
वदेवारविंदाक्षसांख्ययोगप्रवर्तक॥कथंमुच्येतमनुजःकाश्यामेवकृतैरघैः॥४॥मोक्षंप्राप्नोतिचकथं
कथंवाजीवनेसुखं॥आनंदकाननेत्वस्मिन्कथमानंदभाग्भवेत्॥५॥कपिलउवाच॥इदमेवपुराप्ट
ष्टःपार्वत्याभगवान्भवः॥पापनाशंधर्मवृद्धिरविलंबेनमोचनं॥६॥पार्वत्युवाच॥दीनानाथैकशरण
देवदेवदयानिधे॥पाहिलोकान्वभदेज्ञान्सूक्तैःपापप्रणाशनैः॥७॥आगत्यशीघ्रंयेप्राप्ताःकाशीं
तीर्णाःक्षणेनते॥येतुस्थित्वास्वकृतिनस्तेपिशीघ्रंपरंगताः॥८॥पापंकृत्वामृतायेचतेषांमुक्तिःक
थंभवेत्॥कृपयादेवदेवेशप्राप्यश्चित्तमशेषतः॥९॥महादेवउवाच॥शृणुपार्वतिवक्ष्यामियन्नो

व्यंममसर्वतः॥पुण्यवृद्धिःपापवृद्धिःकर्त्तव्यंकाशिवासिभिः॥१०॥नकोपिदृष्टोमनुजोविनापापं
शरीरभाक्॥कुर्वन्नपिमहापुण्यंपापंसंस्कारतश्चरेत्॥११॥देहःस्वकार्यंकुरुतेइंद्रियाणिस्वक
र्मसु॥प्रवर्त्ततेबलादेवमनःकेननिवार्यते॥१२॥प्रायश्चित्तानिकिंतानियैःपुनःसंप्रवर्त्तते॥मनः
शरीरादिपुनःप्रायश्चित्तंनतत्भवेत्॥१३॥प्रायश्चित्तत्रयंसूक्ष्ममनुभूतंमहात्मभिः॥ब्रह्महत्या
दिपापानामन्यपापकृतांनुकिं॥१४॥ काश्यामपिवसन्जंतुर्यदिपापकृदत्रहि॥प्रायश्चित्तत्रयं
कृत्वासद्योमुच्येतबंधनात्॥१५॥देव्युवाच॥ आश्चर्यमेतद्भगवन्त्वयानिगदितंविभो॥ वारा
णस्यांकृतैःपापैर्मुच्यतेयन्नरःसकृत्॥१६॥कृपयातथैतद्ब्रूहिकलावपिहिनिष्कृतिः॥ कलौकलुष
चित्तानांक्वधर्मःक्वपरंपदं॥१७॥श्रीभगवानुवाच॥ शृणुलोकहितेदेविलोकानामुद्धृतिंपरां॥प्राय
श्चित्तत्रयंवच्मिकाश्येनःसंदिधक्षतां॥१८॥वापीकूपतडागादिजीर्णोद्धारकृतांनृणां॥प्रभवेन्नम
हत्पापंकाश्यामपिकृतंहियत्॥१९॥आपोनाराइतिप्रोक्ताआपोवैनरसूनवः॥ अयनंतस्यताःपू

मा॰
२

वैतेननारायणःस्मृतः॥ तेनेश्वरेणहरिणा कृतंपापप्रणाशनं॥ यत्रयत्रजलंकाश्यामुद्धरेत्कृतीनरः॥
॥२१॥ तत्रतत्रमुदायुक्ताःपितरःपर्युपासते॥ काश्यांरुद्रमयाःसर्वेजंतवःश्रुतिनोदिताः॥२२॥ तेपिबंतिज
लंयत्रतडागादौतृषार्दिताः॥ तत्पुण्यंनमयावक्तुंशक्यंवर्षशतैरपि॥ आसीद्धर्मपथोनामवणिक्कश्चि
त्सुधार्मिकः॥ कुलस्तंभस्यवायव्येतेनखातःप्रखानितः॥२४॥ तत्रगावोमनुष्याश्चपिबंत्यंभस्तृषार्दिताः
॥प्रत्यहंतस्यसुकृतंवर्धतेचंद्रमायथा॥२५॥ सूक्ष्मधर्मोमनुष्याणांदुर्लभोविषयात्मनां॥ कालेनमहता
तत्रदुर्भिक्षकरपीडितः॥२६॥ दरिद्रतामवापोच्चैःब्रह्मर्णरुदभूत्ततः॥ ब्राह्मणेनधृतःक्वापिस्वधनार्थंस
गीवणिक्॥२७॥ मद्धनंदेहिदुष्टेतिपरिक्षिप्तःपुनःपुनः॥ ब्राह्मणेनवणिग्धर्मपथोदैन्यमुपागतः॥२८॥ इ
दानींनधनंकिंचिदस्तिब्राह्मणसत्तम॥ ब्राह्मणउवाच॥ शतत्रयपरीमाणंनिष्कानांहेमदेहितत्॥२९॥
नोचेत्तडागोमन्नाम्नाप्रथितव्यस्त्वयापरं॥ त्वत्कारितोबहुधनैर्गंभीरोनिर्मलोदकः॥३०॥ विमुक्तोभवद
त्वाशुतडागंलोकसन्निधौ॥ धर्मपथउवाच॥ अवश्यंमोचयत्वमामृणाच्छीघ्रंभवान्प्रभो॥३१॥ ऋणयु

राम
२

क्लाम्रियंते चेत्सच्यंते नरकार्णवे ॥ जनाश्चोरजनस्यापि गृहीत्वा धनमन्नतु ॥ ३२ ॥ नरके परिपच्यंते ऋण
युक्ता नराधमाः ॥ किंपुनर्ब्राह्मस्याणुमात्रं हृत्वा मृतो हियः ॥ ३३ ॥ ब्राह्मणायद्दिष्यंति तत्कर्त्तास्मिन्संश
यः ॥ सतु वार्द्धुषिको गत्वा मेलयित्वा द्विजान्बहून् ॥ ३४ ॥ आनयामास देवेशि यत्र धर्मपथो वणिक् ॥ द्वि
जैः पृष्टौ वणिग्विप्रौ कथ्यतां ह्लानकारणं ॥ ३५ ॥ यदर्थं वयमाहूतास्तच्छ्रुत्वोपदिशामहे ॥ धर्मपथ उवाच ॥
अहं ऋणी ब्राह्मणस्य निष्काणां चशतत्रयं ॥ ३५ ॥ गृहीतं व्यवहारार्थं देवान्न एं शनैः शनैः ॥ असौ विनियमे
नाशु सुवर्णस्य तडागजं ॥ ३६ ॥ सुकृतं मार्थयत्येवतद्विचार्य यथोच्यतां ॥ यथा कथंचिन्मुक्तः स्यां तथाशीघ्रं वि
धीयतां ॥ ३७ ॥ ब्राह्मणा ऊचुः ॥ साधूक्तं धर्मपथ ते ऋणभीत्या महामते ॥ सुविचारितमस्माभिर्वक्तव्यं सुदृ
ढं खलु ॥ ३८ ॥ अस्मान्नाहूय यो धृष्टो न श्रोष्यति वचो हि नः ॥ शिरस्तस्य विशीर्णेः स नूपतिष्यति न संशयः ॥
॥ ३९ ॥ ब्राह्मण उवाच ॥ ब्राह्मणानां वचो ग्राह्यं मया सर्वात्मना हितं ॥ अत्र प्रमाणं भगवान्विश्वेशः पार्व
तीपतिः ॥ ४० ॥ धर्मपथ उवाच ॥ यद्भूमिदेवैर्वक्तव्यं तन्मया ग्राह्यमेव हि ॥ अत्र प्रमाणं भगवान्विश्वेशः पार्वती

पतिः॥४१॥द्विजाऊचुः॥आनयंतुमनुष्यायेसमर्थामहतीशिलां॥इतिश्रुत्वासुबलिभि र्वणिक्धर्मपथःक्ष
णात्॥४२॥आनयामासविपुलांदृष्ट्वोचुर्ब्राह्मणास्तकृतां॥निक्षिप्यतांतडागेत्रनिमग्नास्तुऋणावधि॥४३॥
यावन्मनुष्यैःपशुभिःपथिकैश्चापितज्जलं॥पीतंतद्धनपर्याप्तमुन्मज्जतुततस्त्वियं॥४४॥इत्युक्त्वासाशि
लाविप्रैःपातितातज्जलेशुभे॥ चक्रुःशिवकथांपुण्यांकाशिवासिजनैर्वृतां॥४५॥क्षणांतरेगोस्तत्तृषितास
वत्सासमुपागता॥तयापीतंजलंतृप्तासाभवच्छ्रुणुपार्वति॥४६॥साशिलाऋषिमुख्यानांप्रभावाज्जल
मध्यतः॥जलोपर्यभवच्छीघ्रंपश्यतांसर्वदेहिनां॥यथातुंबीफलंशुष्कंगच्छतीतीनतस्ततः॥तथालघु
नराजातापश्यधर्मस्यगौरवं॥४८॥सर्वेलोकास्तकृतंदृष्ट्वाप्रशंसुर्ऋषिपुंगवान्॥अपूर्वंदर्शितंपुण्यमृ
षिभिःसुमहात्मभिः॥४९॥अहोनदृष्टमस्माभिःकदाचित्कृमहाद्भुतं॥पुण्यंसूक्ष्मंनजानंतिसर्वेलोकाः
कथंचन॥५०॥महादेवउवाच॥काश्यांकिंचिज्जलंयैस्तुसंपादितमनामयं॥नतेषांपापलेशोपिकाश्या
मपिकृतंप्रिये॥परंतुसावधानैर्हिकर्त्तव्यःसुजलाशयः॥अपराधोनभवतिमहापापकृतक्षयः॥५१॥देव्युवाच

॥जलाशये कृते देवकारिते वा महात्मभिः॥ कोपराधः पतेदत्र तन्ममाचक्ष्व शंकर॥५२॥ महादेव उवाच॥
॥काश्यां तिले तिले लिंगं काश्यां तीर्थं पदे पदे॥ खननं काशिभूमेस्तु दुर्घटं भाति पार्वति॥५३॥ जीर्णोद्धारं च
ये कुर्युस्ते निःसंदेहा महाधियः॥ स्वयं कृतं यत्त्वा तादित तदनेकफलप्रदं॥५४॥ ततोप्यधिकधर्मादि जन
कं जीर्णमुद्धृतं॥ न तत्र लिंगपीडा स्यान्न तीर्थखननं भवेत्॥५५॥ अतो जीर्णोद्धृतिः कार्या निरवद्या म
हाफला॥ जीर्णोद्धारं प्रकुर्वंति तेषां विश्वेश्वरः स्वयं॥ काश्यां कृतानां पापानां मूलोद्धारं करोति हि॥ यो बु
द्धिपूर्वं प्रकरोति पापं न तस्य काश्यां मरणं प्रसिध्यति॥५७॥ मृतोपि निर्वाणसुखं न चाप्नुयात् यावत्पि
शाचत्वमवाप्नुयान्नरः॥ देव्युवाच॥ पिशाचत्वस्य मर्यादां ब्रूहि पापस्य चानघ॥ यातना याश्च यद्रूपं बु
ध्यबुद्धिकृतं च यत्॥५८॥ भगवानुवाच॥ भवानि भवभीतानां नृणां निस्तारकारणं॥ पृष्टं पृथक्त्वमेवं
क्ष्यामि भीतानामभयप्रदं॥५९॥ काश्यामागस्य सततं श्रोतव्या काशिसत्कथा॥ न विना श्रवणं पुण्यपापं
वा वेत्ति कश्चन॥६०॥ विदित्वा यतते भूयो निस्ताराय परायच॥ सर्वलोकेषु वेदेषु विचारः श्रवणाद्भवेत्॥६१

॥श्रुतिस्मृतिपुराणेषुसर्वशास्त्रेषुपार्वति॥काशीब्रह्मेतिविख्याततंतद्ब्रह्मप्राप्यतेत्रहि॥६२॥तस्मात्काशीगु
णान्सर्वेतत्रतत्रवदंतिहि॥श्रुत्वापिपापनिरतास्तान्हन्यात्कालभैरवः॥६३॥संततंनिर्दयोभूत्वाय
वत्पापंसमाप्यते॥महापातकसंयुक्तास्त्रिंशदब्दसहस्रकं॥६४॥प्रत्येकंप्राप्नुवंत्येवयातनांकाल
भैरवीं॥क्षुद्राणिपापानितुसंग्रहेणभवंत्यवश्यंतुमहांतितानि॥यथाहिरण्यंकणशोपिसंचितंनि
ष्कादिवृद्धिंभवतेभवानि॥६५॥सर्वोपिलोकःकुरुतेप्रवृत्तिंप्रवृत्तिभाजांखलुपातकंस्यात्॥अतः
किंयज्जीवितमाकलय्यनिवृत्तिरंगीक्रियतेमुमुक्षुभिः॥६६॥वाक्पातकंमानसकायिकेचप्रवृत्ति
मार्गेनिरतस्यावश्यं॥भवत्यसौयद्यपिसावधानस्तथापिसंस्कारवशादुपैति॥अतःप्रवृत्तिंपरिहृ
त्यसेव्यावाराणसीसाधुजनैःसुखार्थिभिः॥नचेद्यथेष्टाचरणेनयत्फलंतद्भोगकालेप्रकटीभविष्य
ति॥६८॥लौकिक्योयातनाःकैश्चित्सोढुंशक्यानपार्वति॥किंपुनःकालराजेनकृतास्तीव्रातिदुःखि
ताः॥६९॥नित्यंकृतानांक्षुद्राणांपापानांनित्यकर्मणां॥नाशःसंपाद्यतेसद्भिर्गंगास्नानादिभिर्नृभिः॥७०॥

त्रिंशद्वर्षसहस्राणि त्रिंशद्वर्षशतानि च॥ पच्यते दुःखसंघोघैः कालराजेन सादरं॥७१॥ अतः श्रुत्वा नडा

गादिर्जीर्णो द्वारं प्रकल्पयेत्॥ क्षेत्रे कृतानां पापानां प्रायश्चित्तं गतं मम॥७२॥ असावधाना हि नरास्त्मनो वै

कुर्वंति पापानि किमत्र चित्रं॥ पठंति जानंति वदंति नित्यं दासुपंडितास्तेपि विषाग्निमध्यगाः॥७३॥ भवंति

दुःखान्यनुभूय पश्चात्तापेन पापेन च दह्यमानाः॥ पुनः पुनर्विषयासक्तचित्ताः शास्त्रं गुरुं देवमथो तु

काशीं॥७४॥ न्यकृत्य भूयो विषयेष्वेव बुद्धिं कुर्वंति सत्यां न तु काशिकायां॥ व्यवहारोपि तैस्त्यक्तः प्रसि

द्धः सर्वजंतुषु॥ मृत्तिकापरिवर्तेन हिरण्यं प्राप्यते न हि॥७५॥ अहो काश्यां कौतुकं तु पश्य पार्वति सर्वदा॥

गृहीत्वा नरकं देहं प्रददात्यमृतं पुनः॥७६॥ श्रुत्वाध्यायमिमं पुण्यं न दुःखैरभिभूयते॥ सुखवासश्च भ

वति काश्यां संवेजनप्रियः॥७७॥ ॥इति श्री ब्रह्मवैवर्ते पंचक्रोशीमाहात्म्ये प्रथमोध्यायः॥१॥ ॥

॥श्रीदेव्युवाच॥ देवदेव महादेव भक्तानामभयप्रद॥ काशीवासः सुगहनः पापिनां धनलोभिनां॥१॥

विषयासक्तमनसां न सुखाय कदाचन॥ सुखाय सर्वलोकानां प्रवृत्तिः कथिता कलौ॥२॥ विषयैः परिप्लुष्ट

नांजीवनंनान्यथाभवेत्॥ प्रायश्चित्तांतरंदेववदस्वयदिमन्यसे॥ ३॥ प्रायश्चित्तविहीनस्ययातना जायतेध्रुवं॥ बिभेमिदीनान्मनुजान्दृष्ट्वाशास्त्रपराङ्मुखान्॥ ४॥ तान प्युद्धरदेवेशशठान्स्वेच्छाप रिग्रहान्॥ महादेवउवाच॥ साधुपृष्टंत्वयादेविसेव्यपापकृतांनृणां॥ ५॥ निस्तारःस्याद्यथामेद्युप्रायश्चि त्तेनयेनहि॥ प्रायश्चित्तविहीनानांयातनाबहुदुःखदा॥ ६॥ तस्मात्सर्वप्रयत्नेनप्रायश्चित्तंसमाचरेत्॥ जैगीषव्योमुनिश्रेष्ठस्तपस्वीमत्परायणः॥ ७॥ तेनपृष्टोहमागस्त्यशिष्यार्थेनदयालुना॥ स्तुत्वामांवैदि कैःसूक्तैःस्मार्तैःपौराणिकैःशुभैः॥ ८॥ प्रसन्नंमांमुनिर्ज्ञात्वावचनंचेदमब्रवीत्॥ जैगीषव्युवाच॥ किंचि द्विज्ञप्तुकामोहंदेवदेवदयानिधे॥ ९॥ आज्ञयाप्रवदाम्यज्ञःसर्वज्ञस्यतवाग्रतः॥ मयाचोक्तोवदस्वेति त्वंमद्भक्तःप्रियःशुचिः॥ १०॥ अदेयंतवनास्त्यद्यनिर्वाणाद्यपिमाच्यतां॥ यस्तुमांसर्वभावेनभजतेको पिमानवः॥ ११॥ ननस्यादेयमस्तीहत्रैलोकेसचराचरे॥ जैगीषव्युवाच॥ अयंममदुराचारःशिष्यः पापरतःसदा॥ १२॥ काश्यांवसन्नपिमदात्कृत्याकृत्यंनवेत्तियत्॥ शिक्षितोबहुधास्माभिर्बहुधाताडितो

पि च॥१३॥परदारपरद्रोहरत्तः परधनापहृत्॥ पिशुनः पापनिरतो वेश्यागृहनिवासकृत्॥१४॥पितृ मातृगुरुद्रोही विप्रमित्रध्रुगेव च॥ किं बहूक्तेन देवेश पापनिर्वचनं मया॥१५॥न शक्यते लज्जयास्य कर्तुर्यद्ब्राह्मणो ह्यसौ॥ मया निष्काशितः पाप आश्रमात्स्वात्ततो गतः॥१६॥ किंचित्किंचिच्चेष्टितं हि ज्ञात्वा श्रुत्वापि शिक्षितः॥ न करोति यदा किंचिच्छिक्षितं निंदितस्त्वयं॥१७॥ तदा वाग्व्यवहारोपि त्यक्तः सर्वात्मना मया॥ मत्सन्निधौ विनयवान्वेश्याचारो बहिः सदा॥१८॥ इति पौरमुखाच्छ्रुत्वा चेष्टितं तस्य दुर्मतेः॥ मत्सन्निधानाद्गच्छ त्वं नो चेच्छप्स्यामि दुष्कृत॥१९॥ मत्तः पठित्वा शास्त्राणि धर्मज्ञानमयानि च॥ करोषि नित्यं तत्कर्म येन लोकः पराङ्मुखः॥२०॥ बहुधा सर्वलोकेभ्यः श्रुत्वा दुर्विनयं तव॥ त्यक्तो मया यथेच्छं त्वं गच्छ वा तिष्ठ वाधुना॥२१॥ इत्युक्तः स मया शिष्यो लज्जितः पापकृत्तमः॥ गंतुं मतिं स्वां कृतवान् विहायान्यत्र काशिकां॥२२॥ काशीं परित्यज्य गतो विदूरं विंध्याद्रिकूटं समवाप्य चायं॥ तपश्चचाराशु विशुद्धिकारणं वर्षत्रयं पत्रतृणादिभुक्परः॥ त्यक्त्वाद्रिकूटं च ततः प्रयातो गोदावरीं भीमरथीं त

तोपि॥ तत्रापितस्त्वासुचिरंधृतव्रतोनशर्मलेभेसुकृतैकसाध्यं॥२४॥ ततःश्रीशैलमगमद्द्रष्टुंस्वामिन
मव्ययं॥ स्थितमग्रेविभुंस्कंदंददृशेनतवात्मजं॥२५॥ तत्रैववसतिंचक्रेतपःशुद्धंचकारच॥ काश्यां कृ
तानांपापानांशुद्धयेधर्मवृद्धये॥२६॥ एवंबहुतिथेकालेत्वगस्त्यःकुंभसंभवः॥ काशीविरहदुःखेनविह्वलः
समुपागतः॥२७॥ हाकाशिकाशिहाकाशिकाशिहेकाशिकेतिच॥ बहुधाव्याकुलोभूत्वापठन्स्कंदमु
पागतः॥२८॥ वारंवारंश्रवणतःकाशीनामामृतस्यहि॥ मयादृष्टःकाशिवासीत्वगस्त्यःस्कंदएवच॥२९
नानातपोभिरत्युग्रैर्नमयास्कंदईक्षितः॥ काशीनामानलेनाशुदग्धपापोहिदृष्टवान्॥३०॥ इतिमामुक्तवा
न्पूर्वंपुनःपृष्टोमयात्वयं॥ पुनरूचेतपोःशुद्धंसंवादंकाशिसंमतं॥३१॥ अगस्त्यमागतंदृष्ट्वास्कंदःप्रीतमं
नाभवत्॥ स्कंदउवाच॥ आगच्छगच्छमांशीघ्रंपरिष्वजमहामुने॥३२॥ काशिकाविरहात्त्वांतुजाने
व्याकुलमानसं॥ ज्ञा—निनामपिधीराणांयोगिनांसुतपस्विनां॥३३॥ काशीविरहजंदुःखंबाधतेविदु
षांकिल॥ जडानांदेहगेहादिप्रीतियुक्तमनोधियां॥३४॥ अन्यप्रदेशवत्काशीभातिनित्यंदुरात्मनां॥ ९

त्वंकाशीवासतत्वज्ञःशंकरार्चनतत्परः॥३५॥देवैःस्वकार्यनिरतैःकर्मरूपैर्विवासितः॥काश्यांवसति
यःकश्चित्काशींपश्यतियश्चहि॥३६॥काशींस्मरतियःकश्चित्सपूज्योममसर्वदा॥इत्युक्त्वापूजित
स्तेनस्वामिनामुनिसत्तमः॥३७॥दत्वाचमनपानादिसर्वंपप्रच्छकुंभजं॥स्कंदउवाच॥वदस्वागस्त्यशु
द्धात्मन्कंकामंकरवामते॥३८॥नचास्मद्दर्शनंप्राप्यशोचितुंत्वमिहार्हसि॥अगस्त्यउवाच॥जय
देवमहादेवतनयानंददायक॥३९॥वाराणसींप्रापयस्वयदितुष्टोसिषण्मुख॥स्कंदउवाच॥त्वंप्राप्स्य
सिमहाबुद्धेविघ्नांतेकाशिकांशुभां॥तथापिकर्मगहनंकाशींत्यक्त्वात्रतिष्ठसि॥४०॥नज्ञायतेसूक्ष्मत
रंहिकिंचित्कर्मास्तिलोकस्यसुदुर्विभाव्यं॥योगादियज्ञादितपोभिरुग्रैर्युक्तस्यतेसंप्रतिनास्तिकाशी
४१॥नज्ञायतेसूक्ष्मतरंहिपुण्यंनीचापिकाश्यांतनुभृत्सदास्ते॥देवादयोपि——प्रभवंतिनैवस्थातुंक्ष
णंकाशिकायांकुगर्वाः॥४२॥विश्वेशविश्वेशशरण्यशंभोनान्यागतिस्त्वत्पदाब्जंविहाय॥अ
नेकतापार्दितमानसानामस्माकमाकांक्षितदानदक्ष॥४३॥त्वयाकृतेयंजनतापशांतयेप्रपास्मृतं

त्तविहीनानांयातनास्तिसुदारुणा॥६४॥ज्ञानस्वरूपाकाशीयंपंचक्रोशपरीमिता॥तस्याःप्रदक्षिणां
कृत्वानरःपापैःप्रमुच्यते॥६५॥ममब्रह्ममयंलिंगंआपातालात्समुत्थितं॥सत्यलोकोपरिगतमत्यति
ष्ठद्दशांगुलं॥आजन्मसंचितैःपापैर्मुच्यतेतत्प्रदक्षिणात्॥क्षेत्रेकृतानांपापानांप्रायश्चित्तंनचेतरत्॥
॥६७॥प्रदक्षिणद्वयंकृत्वादशजन्मकृताद्घात्॥मुक्तोभवतिपापात्मासद्योमोक्षमवाप्नुयात्॥६८॥शु
भकृद्यदिकुर्याद्विमोहात्पापंनतस्यतत्॥क्षेत्रंप्रदक्षिणीकृत्यभवेत्पापोहिविज्वरः॥६९प्रदक्षिणत्रय
कृत्वापापंजन्मशतार्जितं॥विलयंचप्रयात्येतन्मात्रकार्याविचारणा॥७०॥यावज्जीवंवसेत्काश्यां
प्रत्यब्दंसुप्रदक्षिणं॥कुर्यादेवनिरालस्योत्थानंदसदनस्यहि॥प्रत्यब्दंयेप्रकुर्वंतिपंचक्रोशप्रदक्षिणं
॥जीवन्मुक्तास्तुतेज्ञेया निःपापाःकाशिवासिनः॥७२॥ ॥इतिब्रह्मवैवर्तेतृतीयभागेपंचक्रो॰
शीमहात्म्येद्वितीयोध्यायः॥२॥ ॥श्रीमहादेवउवाच॥अत्रैवोदाहरंतीममितिहासंपुरातनं॥
ऋषिःकूष्मांडतनयोमंडपःसंगदोषतः॥१॥बालएवममक्षेत्रेपापंचरतिवेदवित्॥पित्रानिवारितो॰

मात्राभ्रात्राश्रोत्रिय वंशजः॥ २॥ असत्संगंस्यजत्तिनो विषयासक्तमानसः॥ परदारपरद्रव्यपरद्रोहर
तःसदा॥ ३॥ परापवादकुशलो वेदवादविवर्जितः॥ यथायथा वयस्तस्य वृद्धिंप्रापसुदुर्मतेः॥ ४॥ त
थातथा पापरतः सत्संगविमुखः सदा॥ अपवित्रैस्त्रिभिर्मित्रैः संवृतोराजवेश्मनि॥ ५॥ प्रविष्टोधन
मादायचौर्येणसविनिर्गतः॥ वेश्यागृहेतन्निक्षिप्यतयासहदिवानिशं॥ ६॥ रमतेमंडपोविप्रः पितृवि
पत्वनाशकः॥ कदाचिद्भ्रममाणोसौतृषार्तः समपद्यत॥ ७॥ मंचाधस्ताम्रपात्रस्थां गृहीत्वापीतवान्
सुरां॥ जलबुध्यापातकंतज्जातंतदविचारतः॥ ८॥ किमेतद्धिमयापीतमितिवेश्यांस पृष्टवान्॥ तमा
हसामयानीतंसुरापात्रंस्वसौख्यकृत्॥ ९॥ त्वदर्थेसंभृतंमद्यंपुनः पिबसकृत्सकृत्॥ इतिवेश्याव
चःश्रुत्वाधिग्धिक्पापंमयाकृतं॥ १०॥ वेश्यासंगेनमदिरापीताब्राह्मणसूनुना॥ मंडपस्यततोमि
त्रद्वयमासीत्सुदुःखितं॥ वेश्यामुखात्सुरापानंतस्यश्रुत्वाजगर्हतुः॥ आदौविप्रस्ततोस्माकंसंगीपा
परतःसदा॥ १२॥ सुरापानंततोजातंततस्त्वंकिंकरिष्यसि॥ आच्छादयावःपापंतेसुवर्णदेहिनोबहु॥ १३॥

पं॰मा
९

तथेत्युक्त्वा पुनर्वेश्यागारं गत्वा प्रविश्य सः॥ सुवर्णं याचयामास ताडयामास तं च सा॥१४॥ वेश्योवाच
॥ वराक मम लीलायाः स्वादं ज्ञात्वापि मूर्खवत्॥ सुवर्णं याचसे किं त्वं लक्षमात्रं कियन्मम॥१५॥ चुंबने चुं
बने लक्षं बहुभ्यः प्राप्तमद्य वै॥ त्वं मयोपेक्षितो दीनो दत्वा प्रार्थयसे धनं॥१६॥ कामशास्त्रं त्वया मूढ पठि
तं न कदाचन॥ यतो लीलां न जानासि मम कंदर्पमोहिनीं॥१७॥ गच्छ गच्छ सुखेनाशु यावद्दास्यो न संति
मे॥ ताडयिष्यंति सर्वास्त्वां निर्लज्जं ब्राह्मणाधमं॥१८॥ वेश्यागृहात्ततस्तूर्णं क्षुधितोपि पिपासितः॥ पि
तुः सकाशमगमन्मातुश्च प्रियकाम्यया॥१९॥ पृष्टतो दारकौ प्रासौ मित्रत्वे परिकल्पितौ॥ वदंतौ दे
हि कनकं अस्मदंशं त्वमाशु वै॥२०॥ राज्ञो गृहाद्यदानीतं तस्त्वे येनास्माभिरुत्तमं॥ इति श्रुत्वापि तातस्य
महादुःखसमन्वितः॥२१॥ उवाच दारकौ भीतः कौ युवां केन कर्मणा॥ को भवंतौ कथं संगः कृतोनेन दु
रात्मना॥२२॥ तद्धिरण्यं हि कुत्रास्ते यदर्थं वां व्यवस्थितौ॥ दारकावूचतुः॥ अहं कुविंदस्त्वत्पुत्रो मंडपे
नापितस्त्वयं॥२३॥ मैत्री त्रयाणां संजाता दैवाद्धोषत्रयात्मिका॥ विभज्य भागाः सर्वैर्हि ग्राह्या इति विधिः कृतः॥

राम
९

॥२४॥ अनेन वेश्याभवनेनिक्षिप्तं सर्वमेवहि॥ स्नानप्रयच्छति मुने वेश्यावाद्विवादिनी॥२५॥ अतःपरं राजगृहं गंतव्यं वक्तुमेवहि॥ देहि दापय वास्माकं धनं शीघ्रं हि दुःखदं॥२६॥ नोचेत्तवात्मजः साधोस्मूलप्रोतोभविष्यति॥ रक्षपुत्रं तथास्मांश्च स्वात्मानमपि चानघ॥२७॥ कूष्मांडउवाच॥ आगच्छनमयासार्द्धं राजराजस्यसन्निधौ॥ पुत्रं गृहीत्वा गच्छामि शास्त्यर्थं धर्मतो यथा॥२८॥ राजभिः कृतदंडास्तु शुध्यंति मलिना नराः॥ अनिर्वेशाच्च तेः पापा गच्छंति नरकं मृताः॥२९॥ द्वारकावूचतुः॥ पुत्रं समर्पय मुने किमर्थं त्वं गमिष्यसि॥ राज्ञा गृहं विवादार्थे न गंतव्यं कदाचन॥३०॥ कूष्मांडउवाच॥ भवत्सह न संबंध इत्युक्त्वा नीयतां सुतः॥ नोचेदहं गमिष्यामि राजवेश्म सुनिश्चितं॥३१॥ द्वारकावूचतुः॥ त्वया सह न संबंधो देहि मित्र द्रुहं शठं॥ अस्माभिरेवगंतव्यं त्वं ज्येष्ठस्तिष्ठ लज्जितः॥३२॥ कूष्मांडउवाच॥ पुत्रं गच्छ द्विजश्रेष्ठ द्विजहत्यं त्वया कृतं॥ प्रायश्चित्तं विधायाशु राज्ञा दत्तं न चान्यथा॥३३॥ आगंतव्यं त्वया वत्स नोचेद्याहि यथासुखं॥ तावन्नाहं तव पिता न सुतस्त्वं ममाघवान्॥३४॥ ईश्वरउवाच॥ जैगीषव्यमुनिश्रेष्ठ तेन विप्रेण मंडपः॥ समर्पितस्तयोः पुत्रस्नेहमुन्मुच्य दूरतः॥३५॥ धार्मिकाणां धनैः पुत्रैः कलत्रैः किंप्रयोजनं॥ धर्मसंग्रहशीलानां पतन्तेकाशिवासिनः॥३६॥ पुत्रो भ्राता पिता वापि यः काश्यां पाप

माचरेत्॥ त्याज्य एव स पापात्मा भवेत्संसर्गजाद्भयं॥३७॥ तं नीत्वा तौ दूरदेशं ताडयामास तु क्रमं॥ स ताड्य
मानो मूर्छां तु प्राप मृत्युसमां मुने॥३८॥ मृतोयमिति चोत्सृज्य पितरौ विषण्णवत्॥ पश्चात्तापेन संयुक्ता
वसिसंगमसन्निधौ॥३९॥ त्यक्त्वा विप्रसुतं भीतौ गतौ सिद्धेश्वरालयं॥ तत्रोषित्वा तु तां रात्रिं दुःखितौ सु
धितौ भृशं॥४०॥ पश्चात्तापपरीतौ तु पुनरन्वेषितुं गतौ॥ मृतो वा जीवति तु वा ज्ञात्वा देशं त्यजावहे॥४१॥
यावद्विचारणपरावागतावसिसंगमे॥ तावद्द्विजसुतो भीतो गतमूर्छः प्रतस्थिवान्॥४२॥ पंचक्रोशात्मक
स्यैव शिवलिंगस्य तद्दिने॥ प्रदक्षिणं प्रकुर्वंति शिवमाहात्म्यवेदिनः॥४३॥ क्षेत्रप्रदक्षिणं कृत्वा तत्संगेन वि
निर्गतः॥ तस्मिन्दिने कर्दमेशसंन्निधौ यात्रिणः स्थिताः॥४४॥ सोपि तत्र स्थितो विप्रो मंडपो मंडपो भवत्॥ रात्रौ
जागरणं तेन कृतं नृत्यं शिवाग्रतः॥४५॥ सर्वैः प्रोत्साहितः साधु साधु साध्विति साध्विति॥ अयं परमशैवस्य
कूष्मांडस्य तु मंडपः॥४६॥ पुत्रः शिवव्रतधरः साधु नृत्यति गायति॥ न तस्य चेष्टितं कोपि तन्मध्ये वेत्ति तत्त्व
तः॥४७॥ अत एवाद्दतः सद्भिर्भक्तिं दृष्ट्वा बहिर्गतां॥ सोपि चारुविचित्रांगः सर्वेषां सुमनोहरः॥४८॥ बभूव

सद्भक्तिपरः सत्संगेन हि द्विजोत्तमः॥ विचार्य मनसि त्वेवं शिवभक्त्या सतां प्रियः॥४९॥ ततोऽस्मिन्दुष्टोऽपि सदा पं
च पातकसंयुतः॥ साधुवादः सतां ह्येषो भवति प्रसहं मम॥५०॥ धनधान्यादिलब्धिश्च भोजनाच्छादना
नि च॥ अनायासेन लभ्यन्ते ऋजुमार्गेण नित्यदा॥५१॥ शिवे भक्तिः सतां तुष्टिर्देहपुष्टिर्निराकुला॥ येन मार्गे
ण भवति स मार्गः सर्वसंमतः॥५२॥ एवं विचारयन्सोऽथ चंडिकां प्राप मंडपः॥ तत्र पूजां भीमचंड्याः कृत्वा
काशिनिवासिभिः॥५३॥ ब्राह्मणैर्भोजितः सम्यग्गादृत्य शिवभक्तिकृत्॥ उपविष्टास्ततो रात्रौ देव्याः पुरत
आदरात्॥५४॥ क्षेत्रमाहात्म्यकथनं श्रवणं चक्रुरुत्सुकाः॥ ततो विष्णुजनाः शैवाः कीर्तनं चक्रुरादृताः
॥५५॥ तन्मध्ये मंडपः शौंडो नृत्यं संगानं चकार ह॥ साधुवादेन महता पुनस्तैः साधु सत्कृतः॥५६॥ तस्यापि हि
मनो ब्रह्मन्छिवे मयि समाहितं॥ अथ तृतीये दिवसे मार्ग एव स मंडपः॥५७॥ नृत्यन्गच्छति गायन्स
स्वयमेव शिवस्वयं॥ पदे पदे दक्षिणतः क्षेत्रस्य मम सद्द्विजः॥५८॥ ब्रह्महत्यादिपापानां प्रायश्चित्तं भवेद्य
था॥ महादेव महादेव वासुदेव शिवेति च॥५९॥ स्मरन्नृत्यस्त्यभीक्ष्णं स सर्वैरपि बहिःकृतः॥ तृतीये दिवसे

गत्वातंदेहलिविनायकं॥६०॥पूजयामासरव्यग्रः काशीभक्तिविरूढ्ये॥मंडपोलौल्यरहितःशिवनामप
रायणः॥६१॥वस्त्रान्नमपित्यक्त्वाहरिकीर्तनतत्परः॥ नाश्नातिनपिबत्यंभोनकस्यापिवशेस्थितः॥ ६२॥ नि
र्द्वंद्वःसमदृक्शांतोबभूवागतसाध्वसः॥ब्राह्मणेनमयास्तैन्यंसुवर्णस्यकृतंरहः॥६३॥वंचितश्चपिता
मान्यामातासाध्वीचवंचिता॥पापेनोपार्जितंवित्तंवेश्यावेश्मनितिष्ठति॥६४॥ मनसाविप्रहननंगमनंभर्तु
रेवच॥संपन्नंचसुरापानंसाक्षाद्वेश्यागृहेयाकिं॥६५॥ आहारोमैथुनंनिद्रामिथ्यावादादयोपिहि॥जाताम
मवराकस्यकथंपापपरिक्षयः॥६६॥ अनुतापैःसुसंतप्तोमंडपोमंडवर्जितः॥क्षेत्रप्रदक्षिणंकुर्वन्निःपापः
समपद्यत॥६७॥क्वचिद्रुदतिसंस्मृत्यसंस्मृत्यस्वाघसंचयं॥क्वचिद्धसतिक्षेत्रस्यप्रदक्षिणकृदित्यहं॥६८॥
काशीकाशीतिकाशीतिशिवशंकरकेशव॥पाहिमांपतितंदीनंगुरुदेवापराधिनं॥६९॥ रामेश्वरंसमाग
म्यस्नात्वासंतर्प्यदेवताः॥ रामेश्वरंसमभ्यर्च्यसोमनाथंतथार्च्यहं॥७०॥रामंराजीवपत्राक्षंसीतालक्ष्मण
संयुतं॥ नभुंक्तेनपिबत्यंभोनृत्यगीतादितत्परः॥७१॥प्रार्थ्यमानोपिगृह्णातिनकिंचिदपिखेदकृत्॥

ततःप्रचलिताःसर्वेयात्रिणःशिवतत्पराः॥७२ मंडपोपिस्मरन्काशींशिवंविष्णुंप्रतस्थिवान्॥वृषभ
ध्वजमागत्यस्नात्वावैकापिलेह्रदे ॥७३॥ देवंसंपूज्यविधिवत्स्थित्वातत्रचपूर्ववत्॥ततःप्रभातेवरु
णासंगमेस्नानमाप्यच॥७४॥गताःसर्वेविश्वनाथंद्रष्टुंश्रीपार्वतीपतिं॥ तत्रस्थित्वामहापूजांकृत्वास
र्वेमहाजनाः॥७५॥अन्नानिवासोरत्नानिदद्दुःशंकरतुष्टये॥मंडपोपितथाकृत्वामोक्षमंडपमध्यतः
॥७६॥साष्टांगंप्रणतःप्राहतत्सदोमध्यगोऽघकृत्॥ मयापापानिसर्वाणिसुमहांतिबहूनिच॥७७॥कृ
तानितत्रवदतनिष्कृतिंममसत्तमाः॥यथाहंपापनिर्मुक्तोभवामीहतदुच्यतां॥७८॥ सदस्याऊचुः॥
त्वंनिःपापोसिभक्तोसिशिवयोःकेशवस्यच॥पंचक्रोशात्मकंलिंगंसत्संगाद्दक्षिणीकृतं॥७९॥मैत्रीवा
णिज्यमूल्याद्यैःकिंपुनःश्रवणादिभिः॥येनकेनापिसुमहत्पापंतस्यनविद्यते॥ ८०॥मंडपउवाच॥पि
त्रानिष्कासितःसोहंकथंयास्यामितद्गृहं॥प्रतीतिकरणंकिंचिदस्तिचेत्क्रमनेममच॥८१॥प्रेषयंतुवदा
सभ्याःशास्त्रप्रत्ययसंयुताः॥ गर्हयंतिगृहस्थानोनोचेत्किंगमनेनमे॥८२॥ सदस्याऊचुः॥आकार

यस्त्वपितरंअस्मद्वचनगौरवात्॥प्रतीतिंदर्शयामोद्यदंडनाथस्यसन्निधौ॥८३॥महादेवउवाच॥मंडपोथगृहद्वारंगत्वाशिवशिवेतिच॥महादेवमहादेवेत्युक्त्वातूष्णींव्यवस्थितः॥कूष्मांडःप्राहद्पितांकोतिथिर्द्वारिवर्तते॥पश्यपश्यासुसुभगेशिववाक्शंकरप्रियः॥८५॥साभर्तुर्वचनाद्गत्वादृष्ट्वामंडपमात्मजं॥उवाचवचनंभीताभर्तुःपुत्रार्थमातुरा॥८६॥अकृत्वैवचनिर्वेशंकथमागमनंवद॥मंडपउवाच॥आहूयंतिसदास्यास्त्वांपितरंचममानघ॥८७॥निर्वेशावार्ताबहुलांतएवब्रूयुरग्रतः॥जननीमंडपस्याथगत्वाकूष्मांडमब्रवीत्॥८८॥पुत्रस्तेकृतनिर्वेशःशिवस्मरणतत्परः॥द्वारितिष्ठतिसद्रूपोनातिथिःकश्चनेतरः॥८९॥कृतनिर्वेशमनघंश्रुत्वापुत्रंतुसद्विजः॥उत्थायागत्यसहसाददर्शशिवरूपिणं॥९०॥रुद्राक्षमालिनंशांतंविभूतिकृतभूषणं॥उवाचकिंसमायातःशीघ्रंपुत्रतथाघवान्॥९१॥नहिस्वल्पेनपुण्येनप्रायश्चित्तंमहद्भवेत्॥मंडपउवाच॥मयाबहूनिपापानिकृतानिविविधानिच॥९२॥नज्ञायंतेत्वयापित्राकिमन्यैर्दूरसंस्थितैः॥बलात्वामाह्वयंत्स्येवसदस्याःसुहृद्दर्शिनः॥९३॥यत्प्रोच्यते

कुरु तथा त्वं मत्स्नेहेन माव्रज॥ इति श्रुत्वा मंडपस्य वचः पत्न्या समन्वितः॥९४॥ मुक्तिमंडपिकां प्राप सदस्यैः
संस्थितां शुभां॥ नैराहूतो द्विजवरैर्धर्माधर्मार्थदर्शकैः॥९५॥ उपविष्टं तमूचुस्ते पुत्रस्ते शुद्धिमागतः॥ कू
ष्मांड उवाच॥ प्रायश्चित्तेन केनासौ शुद्धिं प्राप्तो ममात्मजः॥९६॥ प्रतीतिर्मम वा कास्या वद नेन तु भुज्यते
॥सदस्या ऊचुः॥ मुक्तिमंडपिकाया स्तु स्वामी विष्णुर्न चापरः॥९७॥ स चेद्वदति वेदात्मा तदा शंका न चो
त्तरं॥ तत्पार्षदा भानुमुख्या वदिष्यंति च सत्तम॥९८॥ तदा मन्यस्व सुप्रीतः शास्त्रं देवप्रसादतः॥ इ
त्युक्त्वा च सदस्यास्ते तुष्टुवुर्विष्णुमव्ययं॥९९॥ रविं दुंढिं दंडपाणिं भैरवं चैव पंचमं॥ पंचापि तत्र सु
प्रीताः मुक्तिमंडपमध्यतः॥१००॥ प्रादुर्भूता महात्मानो लोकप्रत्ययकारकाः॥ विष्णुरुवाच॥ अयं शु
द्धो महापापो मंडपः साधुसंगतः॥१॥ काश्याः प्रदक्षिणं कृत्वा त्वर्चयित्वा जगद्गुरुं॥ माहात्म्यश्रवणं
जातं क्षेत्रस्याशुभनाशनं॥२॥ तस्माद्वयं गच्छतु स्वं गृहं पितृसमन्वितः॥ ढुंढिरुवाच॥ काशीति नाम
जपतां शिवनामतुल्यं विघ्नादिपापनिचयो विलयं प्रयाति॥ किं तत्कथाश्रवणकीर्तनवासदानैः सम्यक्कृ

प्रदक्षिणवतामशुभस्यनाशः॥३॥ दंडपाणिरुवाच॥ काश्यांपापंयेप्रकुर्वंतिपापास्तेषांदुःखंजायतेव
श्यमेव॥ शंभोर्लिंगसच्चिदाकाशरूपंपंचक्रोशंतत्परिक्रम्यशुद्धः॥४॥ भैरवउवाच॥ कार्यममैतत्तव
लुपापिनांसदाकरोमिदंडबहुधावश्यमेव॥ प्रदक्षिणीकृत्यसमागतस्त्वयंकाशींविशुद्धोनविचारमस्ति
तत्॥५॥ रविरुवाच॥ सत्संगतःक्षेत्रसुदक्षिणीकृतकाशीकथाश्रवणकीर्तनादयं॥ शुभप्रदंपापहरंसु
वासदंकृतंत्वशुद्धोमंडपःसत्यमेव॥६॥ महादेवउवाच॥ सभासदैर्देववरैरुक्तोकुष्मांडमंडपे॥ प्रदक्षि
णीकृत्यतुतान्नमस्कृत्यपुनःपुनः॥७॥ निःपापोहर्षसंपूर्णोययतुस्तोस्वमालयं॥ प्रदक्षिणफलंब्रह्मन्
पंचक्रोशात्मकस्यहि॥८॥ लिंगस्ययन्मयाप्रोक्तंसुगोप्यंपुरुषार्थदं॥ श्रुत्वामाहात्म्यमतुलंपंचक्रोशा
त्मकस्यच॥९॥ लिंगस्यदक्षिणाकार्यात्वयाशिष्येणचानघ॥ इतिश्रुत्वाप्रसन्नात्माजैगीषव्योमहामुनिः
॥१०॥ देवंप्रदक्षिणीकृत्यनमस्कृत्यपुनःपुनः॥ जगामपंचक्रोशस्ययात्रार्थंशिष्यसंस्कृतः॥११॥ पंचभिर्दि
वसैःकृत्वाश्रमाम आगतोमुनिः॥ उपविष्टोविधिःसम्यक्यात्रायाःपापनाशनः॥१२॥ मयापुण्यकृदेवापि

निर्विघ्नफलदायकः॥ मुनिरागत्यविश्वेशं भवान्यासहितंतदा॥१३॥पूजयामासविधिवदु पचारैःसुवि
स्तरैः॥ शिष्योगुरुप्रसादेननिःपापोपुण्यवान्सुधीः॥१४॥जातःस्कंदप्रसादेनश्रुत्वामाहात्म्यमुत्तमं॥
॥महादेवउवाच॥एतत्तेकथितंदेवकाश्यांयत्पातकंकृतं॥तस्यप्रणाशनंशुद्धंप्रायश्चित्तंसुदुर्लभं॥१५
॥श्रुत्वाध्यायमिमंपुण्यंसर्वपापप्रणाशनं॥नरःशुद्धिमवाप्नोतिकाशीवासंचगर्भत्हत्॥१६॥ इतिश्रीब्र
ह्मवैवर्ततृतीयविभागेपंचक्रोशीमाहात्म्येतृतीयोध्यायः॥३॥ ॥ऋषयऊचुः॥सूतसूतमहाबुद्धेव
दविद्याविशारद॥यथाप्रदक्षिणाकार्यामनुजैर्विधिपूर्वकं॥१॥स्थानंवासस्यवदनोभक्ष्यंचाभक्ष्यमेव
च॥ पूजांसीम्निस्थितानांचदेवानांदानमेवच॥२॥ यथासंपूर्णतामेतियात्राक्षेत्रस्यसत्तम॥ सूतउ
वाच॥एवमेवपुरापृष्टोभगवान्शिवयाशिवः॥३ तत्ब्रवीमिमुनिश्रेष्ठाःशृण्वंतुविधिवन्मम॥श्रीदेव्यु
वाच॥भगवन्देवदेवेशप्रदक्षिणविधिंवद॥४॥पंचक्रोशस्ययेनासौनिष्पापःपुण्यवान्भवेत्॥श्री
महादेवउवाच॥आश्विनादिषुमासेषुत्रिषुपार्वतिसत्तमे॥५॥प्रदक्षिणाप्रकर्तव्याक्षेत्रस्यापापकांक्षि

भिः॥ माघादिच्चतुरो मासाः प्रोक्ता यात्राविधौ नृणां॥६॥ पूर्वस्मिन्दिवसे ढुंढिं पूजयित्वा हविष्यभुक्॥ मा
तरुत्तरवाहिन्यां स्नात्वा विश्वेशमर्चयेत्॥७॥ पुनर्यात्रार्थमपि च शिवयोः पूजनं भवेत्॥ मुक्तिमंडपि
कायां च संविश्य वरवर्णिनि॥८॥ प्रतिज्ञां महतीं कृत्वा पूजनं तत्र तत्र ह॥ काश्यां प्रज्ञानवाक्कायमनोज
नितमुक्तये॥९॥ ज्ञाताज्ञातविमुक्त्यर्थं पातकेभ्यो हिताय च॥ पंचक्रोशात्मकं लिंगं ज्योतिरूपं सनातनं
॥१०॥ भवानीशंकराभ्यां च लक्ष्मीश्रीशविराजितं॥ ढुंढिराजादिगणपैः षट्पंचाशद्भिरावृतं॥११॥ द्वा
दशादित्यसहितं नृसिंहैः केशवैर्युतं॥ कृष्णारामत्रयस्युतं कूर्ममत्स्यादिभिस्तथा॥१२॥ अवतारैरनै
कैश्चयुतं विष्णोः शिवस्य च॥ गौर्यादिशक्तिभिर्जुष्टं क्षेत्रं कुर्यां प्रदक्षिणं॥१३॥ बद्धांजलिः प्रार्थयीत
महादेवमहेश्वरी॥ पंचक्रोशस्य यात्रां वै करिष्ये विधिपूर्वकं॥१४॥ प्रीत्यर्थं तव देवेश सर्वाघौघप्रशां
तये॥ इति संकल्प्य मौनेन प्रणिपत्य पुनः पुनः॥१५॥ ढुंढिराजगणेशान महाविघ्नौघनाशन॥ पंचक्रो
शस्य यात्रार्थं देह्याज्ञां कृपया विभो॥१६॥ विश्वेशं त्रिः परिक्रम्य दंडवत्प्रणिपत्य च॥ मोदं प्रमोदं

सुमुखं दुर्मुखं गणनायकं॥१७॥ प्रणम्य पूजयित्वा द्वौ दंडपाणिं ततोऽर्चयेत्॥ कालराजं च पुरतो विश्वेशस्य जगद्गुरोः॥१८॥ पूजयित्वा ततो गच्छेन्मणिकर्णीं विधानतः॥ तत्र स्नात्वा महादेवं मणिकर्णीशमर्चयेत्॥१९॥ विनायकं सिद्धिसंज्ञं पुनरागत्य पूजयेत्॥ मणिकर्णीतटे गच्छन्गंगाकेशवमच्युत॥२०॥ ललितां च ततः पूज्य जरासंधेश्वरं विभुं॥ सोमनाथं ततः पूज्य दाल्भ्येश्वरमेव च॥२१॥ शूलटंकेश्वरं लिंगं वाराहं पूज्य च व्रजेत्॥ दशाश्वमेध लिंगं च बंदीं तत्रैव पूजयेत्॥२२॥ सर्वेश्वरं च केदारं ततो हनुमदीश्वरं॥ संगमेशं ततः पूज्य लोलार्कं पूजयेत्ततः॥२३॥ अर्कसंज्ञं गणाध्यक्षं असेस्तीरे पुनर्व्रजेत्॥ क्षेत्रप्रदक्षिणां कुर्वन् तिलमात्रं न सत्यजेत्॥२४॥ दुर्गाकुंडे नरः स्नात्वा यजेद्दुर्गविनायकं॥ दुर्गां संपूज्य विधिवत् वसेत्तत्र सुखाप्तये॥२५॥ ब्राह्मणान्भोजयेत्तत्र मधुपायसलड्डुकैः॥ रात्रौ जागरणं तत्र पुराणश्रवणादिकं॥२६॥ कुर्याच्च कीर्त्तनं भक्त्या परोपकरणादि च॥ जय दुर्गे महादुर्गे जय काशीनिवासिनि॥२७॥ क्षेत्रविघ्नहरे देवि पुनर्दर्शनमस्तु ते॥ इति दुर्गां प्रार्थयित्वा विष्वक्सेनेश्वरं ततः॥२८॥ पूजयि

त्वा कर्दमेशं पंचब्रीहिति स्वनेमेन्॥ आदौ कर्दमतीर्थेतु स्नानं कूपावलोकनं॥२९॥ सोमनाथं विरूपाक्षं नीलकं
ठं ततोर्चयेत्॥ तत्र वासं विधायाग्नौ किंचिद्धोमं द्विजार्चनं॥३०॥ श्राद्धादिविधिकृत्यानि कृत्वा मुच्येत् ऋण
त्रयात्॥ कर्दमेश महादेव काशीवासजनप्रिय॥३१॥ त्वत्पूजनान्महादेव पुनर्दर्शनमस्तु ते॥ प्रातःस्ना
त्वा पूजयित्वा समर्च्य च द्विजानपि॥३२॥ नागनाथं च चामुंडां मोक्षेशं करुणेश्वरं॥ वीरभद्रं ततो दुर्गं वि
कटाख्यां प्रपूजयेत्॥३३॥ उन्मत्तभैरवं नीलं कालकूटं ततोर्चयेत्॥ दुर्गां च विमलां नत्वा महादेवं ततो व्र
जेत्॥३४॥ नंदिकेशं भृंगिरीटिं तथैव च गणप्रियं॥ विरूपाक्षं च यक्षेशं विमलेश्वरमेव च॥ मोक्षदं ज्ञानदं चै
वाऽमृतेशं तत्र पूजयेत्॥ गंधर्वसागरं तीर्त्वा भीमचंडीं ततो व्रजेत्॥३६॥ तत्र स्नात्वा भीमचंडीं पयसा स्ना
पयेत्सुधीः॥ पंचोपचारैः संपूज्य ब्राह्मणान् परितोषयेत्॥३७॥ तत्र वासं प्रयत्नेन कुर्याच्चंडविनायकं॥ र
विरक्ताक्षगंधर्वं नरकार्णवतारकं॥३८॥ शिवं प्रपूज्य यत्नेन रात्रौ पूर्ववदाचरेत्॥ प्रातरुत्थाय सुस्नातः प्रार्थये
द्भीमचंडिकां॥३९॥ भीमचंडी प्रचंडानि मम विघ्नानि नाशय॥ नमस्तेस्तु गमिष्यामि पुनर्दर्शनमस्तु ते॥४०॥

ततो गच्छेद्देकपादं गणं नत्वाथ तंडुलान्॥ तिलांश्च विकिरेत्तत्र धनधान्यादिसंपदं॥४१॥ ततो गच्छन्म हा
भीमभैरवं भैरवीं शुभां॥ भूतनाथं च सोमेशं प्रपूज्य सिंधुरोधसि॥४२॥ कालनाथं कपर्दीशं कामेशं च गणे
श्वरं॥ वीरभद्रं चारुमुखं गणनाथं प्रपूजयेत्॥४३॥ ततो गच्छेद्देहलीशं विघ्नपूगनिवारणं॥ मोदकैः पृथु
केलीजैः सक्तुभिश्चेक्षुपर्वभिः॥४४॥ पूजयेच्छ्रद्धया देवं तं देहलिविनायकं॥ तत्पार्श्वे षोडश पुनर्विघ्ननाथा
न्समर्चयेत्॥४५॥ उद्दंडगणपं पूज्य उत्कलेश्वरमेव च॥ रुद्राण्यास्तत्ततो भूमिं दृष्ट्वा रामेश्वरं व्रजेत्॥४६
वरणायां ततः स्नात्वा तर्पणादिविधानतः॥ रामेश्वरं श्वेततिलैर्बिल्वपत्रादिभिर्यजेत्॥४७॥ सोमनाथं तु तत्
त्रैव पूजयेदिंदूदिग्गतं॥ भरतेशं लक्ष्मणेशं शत्रुघ्नेश्वरमेव च॥४८॥ द्यावाभूमीश्वरं तत्र पूजयेन्नहुषेश्व
रं॥ तत्र वासं प्रकल्प्याथ पूर्ववज्जागरादिकं॥४९॥ कृत्वा स्नात्वाथ रामेशं पूजयेत्काशिवासदं॥ श्रीरामेश्व
र रामेण पूजितस्त्वं सनातन॥५०॥ आज्ञां देहि महादेव पुनर्दर्शनमस्तु ते॥ लिंगानि सुबहून्यादौ वरणापा
रगान्यथ॥५१॥ पूजयित्वा ततो गच्छेद्देवसंघनिषेवितं॥ देवसंघेश्वरं किंचिद्दत्वास्थित्वा ततो व्रजेत्॥५२॥

प॰मा॰
१६

पाशपाणिं गणेशं च क्षेत्रमध्ये व्यवस्थितं॥ पूजयित्वा बहिश्चैव पृथ्वीश्वरमथो व्रजेत्॥ ५३॥ एकाम्रवनमध्यस्थ
नाकूतक्षेत्राद्बहिःपुरा॥ स्वर्गभूमिस्तु सा ज्ञेया मोक्षभूमिस्तु मध्यतः॥ ५४॥ काश्याश्चतुर्दिशं देवि योजनं स्व
र्गभूमिका॥ मृतास्तत्र हि गच्छन्ति स्वर्गं सुकृतिनां पदं॥ ५५॥ ततस्तु यूपं हि सरः स्पृष्ट्वा गच्छेच्छनैःशनैः॥ महाक्षे
त्रं कापिलं तु यत्र श्री वृषभध्वजः॥ ५६॥ तत्र स्नात्वा विधानेन तर्पयित्वा पितॄनथ॥ श्राद्धं विधाय सुश्रद्धः पू
जयेद्वृषभध्वजं॥ ५७॥ निवसेत्तं तु दिवसं पुराणादि प्रकल्पयेत्॥ प्रदक्षिणीकृत्य ततो गच्छेज्ज्वालानृसिंह
कं॥ ५८॥ एवं प्रदक्षिणीकृत्य सरः कापिलमुत्तमं॥ वरुणां च ततस्तीर्त्वा स्नात्वा वै संगमे शुभे॥ ५९॥ आदिके
शवमभ्यर्च्य संगमेश्वरमेव च॥ विनायकं खर्वसंज्ञं पूजयित्वा ततो व्रजेत्॥ ६०॥ कोडीकृत्य यवान् शु
क्लान् विकिरन् विष्णुमुच्चरन्॥ प्रल्हादेश्वरमभ्यर्च्य त्रिलोचनमतः परं॥ ६१॥ बिंदुमाधवमभ्यर्च्य हृदे
पंचनदे शुभे॥ गभस्तीशं मंगलां च गौरीं दृष्ट्वा ततो व्रजेत्॥ ६२॥ वसिष्ठवामदेवौ च पर्वतेश्वरमेव च॥ महेश्वरं स
मभ्यर्च्य ततः सिद्धिविनायकं॥ ६३॥ सप्तावरणगान् दिव्यान् पूजयेद्गणनायकान्॥ मणिकर्ण्यां ततः स्नात्वा गच्छेद्दृश्वे

राम
१६

श्वरंयमी॥६४॥ नमस्कृत्यमहेशानंप्रविशेद्देवसन्निधौ॥पंचोपचारैःसंपूज्यस्तुत्वानत्वापुनःपुनः॥६५॥
मुक्तिमंडपमागत्यकृतार्थस्तत्रसंविशेत्॥विष्णुंवदंडपाणिंचढुंढिंभैरवमेवच॥६६॥आदित्यंपंचगणपा
न्पूजयेत्पुनरेवच॥प्रदक्षिणीकृतान्देवान्स्मरेत्तत्रक्रमात्सुधीः॥६७॥जयविश्वेशविश्वात्मन्काशीना
थजगद्गुरो॥त्वत्प्रसादान्महादेवकृतामेत्रप्रदक्षिणा॥६८॥अनेकजन्मपापानिकृतानिमयशंकर॥गतानि
पंचक्रोशात्मलिंगस्यसम्यक्प्रदक्षिणात्॥६९॥त्वद्भक्तिःकाशिवासश्चरहितापापकर्मणा॥सत्संगश्चव
णाद्वैश्चकालोगच्छतुनःसदा॥७०॥हरशंभोमहादेवसर्वज्ञसुखदायक॥प्रायश्चित्तंमुनिर्वंतंपापानां
त्वत्प्रसादतः॥७१॥पुनःपापमतिर्मास्तुधर्मबुद्धिःसदास्तुमे॥इतिजप्त्वायथाशक्त्याद्त्वादानंद्विजन्म-
नां॥७२॥बध्वाकरयुगंयात्रीमंत्रमेनमुदीरयेत्॥पंचक्रोशस्ययात्रेयंयथावद्यामयाकृता॥७३॥न्यूनंसंपूर्ण
तांयातुत्वत्प्रसादादुमापते॥इतिप्रार्थ्यमहादेवंगच्छेद्गेहंस्वकंस्वकं॥७४॥न्यूनातिरिक्तदोषाणांपरिहारा
यदक्षिणां॥संकल्प्यागत्यचगृहंब्राह्मणान्भोजयेत्ततः॥७५॥ततआगत्यचगृहेकुटुंबैःसहभोजनं॥कृत्वा

पं·मा
१७

त्मानंततोध्यात्वाकृतकृत्योभवेत्ततः॥७६॥ एकरात्रंतुमध्येयःप्रवसेच्छुचिमानसः॥वरुणायास्तटेरम्ये
सयातिपरमांगतिं॥७७॥ द्विरात्रिंवसतिंमध्येयःकुर्याद्धर्मतत्परः॥प्रथमंचंडिकाक्षेत्रेद्वितीयंवरुणातटे
॥७८॥ दिवसंतुवसेद्धीमान्ततोविश्वेश्वरंव्रजेत्॥ यस्तुत्रिरात्रमुषितोमध्येभवतिपार्वति॥७९॥ दुर्गा
स्थलेभीमचंड्यांरामेशेवासमृच्छति॥ वसतिंयस्तुकुरुतेमध्येदिनचतुष्टयं॥८०॥ प्रथमांवसतिंकुर्यात्क
र्दमेश्वरसन्निधौ॥ द्वितीयांभीमचंड्यांतुरामेशंतुतृतीयकं॥८१॥ चतुर्थींकापिलेक्षेत्रेवसतिंप्रतिकल्पयेत्
॥ राजन्यकुमाराणांयथेष्टंवासमिष्यते॥ यथाकथंचिद्देवेशिपंचक्रोशप्रदक्षिणं॥कुर्याद्देवनमास्साद्
चिंतयेद्धर्मकोविदः॥८३॥ सत्यवस्तुभवः कालोयत्रश्रद्धोदयोभवेत्॥ श्रद्धाहि दुर्लभालोकेकलौखलु
विशेषतः॥८४॥ श्रद्धेवतीर्थंदेवाश्चश्रद्धास्वर्गापवर्गकौ॥श्रद्धयायत्कृतंसर्वमनंतफलदंभवेत्॥८५॥स
त्येश्रद्धागुणवतीनास्त्येसाफलप्रदा॥ काश्यांवसतियोनित्यंस्नातिभागीरथीजले॥८६॥ कुर्यात्तांवत्स
रीयात्रांपंचक्रोशस्यसुंदरि॥सब्रह्मभूतोनिवसन्ममानुग्रहतःसुखी॥८७॥ इतिश्रीब्रह्मवैवर्तेपंचको॰

राम
१७

श्रीमाहात्म्येचतुर्थोध्यायः॥४॥ ॥देव्युवाच॥ क्षेत्रप्रदक्षिणेदेवनियमाःकेभवंतितान्॥ वदस्वनारिता
शेषविश्वनाथकृपालय॥१॥ महादेवउवाच॥ प्रतिग्रहंपरान्नंचपरदाराभिभाषणं॥ परस्वग्रहणंस्नेहाद
सद्वार्तांचवर्जयेत्॥२॥ असतांपापिनांसंगंनकुर्यात्स्वयतोनरः॥ असत्समागमात्सर्वंनिष्फलंजायतेनृणां
॥३॥ ममद्रोहपरैःसाकंनव्रजेद्विष्णुनिंदकैः॥ परापवादंनोकुर्यात्परद्रोहंचवर्जयेत्॥४॥ गुरुनिंदांशा
स्त्रनिंदांशिवधर्ममहात्मनां॥ तीर्थलिंगंतयोर्निंदांनकुर्यात्तुप्रदक्षिणी॥५॥ अन्यदातुकृतंपापंनश्येत्
तत्क्षेत्रप्रदक्षिणात्॥ पापंप्रदक्षिणामध्येकृतंकेनप्रणाश्यते॥६॥ ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैश्चैवांत्यज
तिभिः॥ कांक्षिभिःपरमंतत्त्वंकर्त्तव्यंक्षेत्रदक्षिणं॥७॥ किंचिद्दानंप्रत्यहंब्राह्मणेभ्योदेयंदीनानाथपंग्वं
धकेषु॥ भूमौशय्यातैलमांसादिदुष्टंसर्वंवर्ज्यंतीर्थयात्रादिनेषु॥८॥ स्नानद्वयंप्रकुर्वीतनित्यश्राद्धंचसुं
दरि॥ यदत्रकिंचित्क्रियतेकोटिकोटिगुणंभवेत्॥९॥ ब्रह्मचारीगृहस्थोवावानप्रस्थोथमस्करी॥ क्षेत्रे
वसन्बहिर्वापिकुर्यादेवप्रदक्षिणं॥१०॥ ब्रह्महत्यादिपापानांप्रायश्चित्तंनचापरं॥ बहिःकृतानांपापानां

मध्येवापिसुरेश्वरि॥११॥आयश्चित्तांतरं प्रसंगेनहृष्टंनमयाश्रुतं॥वसंतिदेवाबहवःस्वर्गभूमौबहिःसदा॥१२
॥मदाज्ञांपालयंत्येववासार्थंदैन्यमागताः॥बहिस्थिताःप्रकुर्वंतिदक्षिणंक्षेत्रलब्धये॥१३॥ममानुग्रहमा
साद्यप्रविशंतिहिकाशिकां॥मदनुग्रहकामैश्चपंचक्रोशात्मकंप्रिये॥१४॥लिंगं प्रदक्षिणीकृत्यद्रष्टव्यो
हंकृपानिधिः॥अस्मिन्क्षेत्रेमहादेविपुण्यंपुण्यतरंतुवा॥१५॥ अनंतकोटिगुणितंभवत्येवनसंशयः
॥अंतर्गृहेकृतंपापंकेवलंयातनावहं॥१६॥अन्यक्षेत्रेकृतंपापपुण्यक्षेत्रेविनश्यति॥पुण्यक्षेत्रेकृतंपा
पंगंगातीरेविनश्यति॥१७॥गंगातीरेकृतंपापंवाराणस्यांविनश्यति॥वाराणस्यांकृतंपापमंतर्गृहेवि
नश्यति॥१८॥अंतर्गृहेकृतंपापंवज्रलेपोभविष्यति॥वज्रलेपच्छिदंह्येतत्पंचक्रोशप्रदक्षिणं॥१९॥तस्मा
त्सर्वप्रयत्नेनकुर्यात्क्षेत्रप्रदक्षिणं॥वाराणसींतुसंप्राप्यप्रमादाद्योबहिर्गतः॥२०॥दैवात्संपुनरागत्य
दक्षिणेनप्रमुच्यति॥अविमुक्तंमहाक्षेत्रंसर्वदाजननीयथा॥२१॥पुत्रस्यजननीलोकेसर्वथाहितकारि
णी॥हितकृत्सर्वजंतूनांकाशीहामुत्रसर्वदा॥२२॥देव्युवाच॥भगवन्सर्वभूतेशकृपापूरितविग्रह॥कृ

तार्थानांवद्विभोक्षेत्रसंन्यासिनामपि॥२३॥प्रदक्षिणक्रमंक्षेत्राद्बहिर्वामध्यतोपिवा॥नियमस्यनभंगः
स्याद्यथापापंचनश्यति॥२४॥ देहिनांपापसंबंधःसर्वथाजायतेक्रमात्॥ तत्काशिवासजंनश्येत्क्षेत्र
संन्यासिनांयथा॥२५॥श्रीभगवानुवाच॥सम्यक्पृष्टंत्वयादेविमहाहंकारनाशनं॥प्रायश्चित्तंन्यासि
नांहिक्षेत्राघौघविनाशनं॥२६॥विधिस्तुपूर्वमेवोक्तोनियमादियुतस्तव॥प्रदक्षिणक्रमंतेषामवधारय
सुव्रते॥२७॥स्नात्वादेवंसमभ्यर्च्यविश्वेशंविश्वयासह॥मोदादिपंचकंढुंढिंदंडपाणिंचभैरवं॥२८॥
पूर्ववत्तीरगान्पूज्यदुर्गांपूज्यचयत्नतः॥बहिरावरणंत्यक्त्वागणेशानांचसप्तमं॥२९॥मध्येप्रदक्षिणं
कुर्यादसीवरुणयोःकृती॥सन्मुखीभूयविधिवत्पूज्यायेवामतस्थिताः॥३०॥देवादेव्यश्चफलदाः
क्षेत्रपालाःप्रयत्नतः॥एकरात्रंद्विरात्रंवावसेन्मध्येत्रिरात्रकं॥३१॥यत्रश्रद्धासुमहतीवसेत्तत्रनसंशयः
॥मत्स्यहंदंडपाणेस्तुपूजाकार्याप्रयत्नतः॥३२॥दंडपाणेःपूजनेनसिद्धाभवतिनान्यथा॥दंडपाणेयक्षपतेक्षे
त्रसन्यासिवल्लभ॥३३॥पंचक्रोशस्ययात्रेयंसिद्धामेत्वत्प्रसादतः॥अनेनश्लोकमंत्रेणप्रार्थनापूजनंस्मृतं॥३४॥

प्रत्यहं कुर्वतां यात्रा संपूर्णा भवति ध्रुवं॥ आगस्त्यविश्वनाथस्य पूजा कार्या तु पूर्ववत्॥ ३५॥ देव्युवाच॥
प्रत्यहं दंडपाणेस्तु पूजा प्रोक्ता विशेषतः॥ किमेतद्रुद्र देवेश यात्रा मुद्दिश्य शंकर॥ ३६॥ महादेव उवाच
काशीं प्राप्य बहिर्नैव गच्छेत्सर्वात्मना क्वचित्॥ मन्मुखात्सम्यगाश्रुत्य क्षेत्रसंन्यासकृत्तमः॥ ३७॥ दंड
पाणिः स भवत्तदारभ्य वरानने॥ पुनः कालांतरे देवि ऋषिभिर्नारदादिभिः॥ ३८॥ पृष्टोहं क्षेत्रजनितपा
पनाशनमुत्तमं॥ सदा सुदुर्लभं देवि प्रायश्चित्तं तदा महत्॥ ३९॥ उपदिष्टं महालिंगप्रदक्षिणमशेषतः
॥ तच्छ्रुत्वा पृष्टवान् दंडपाणिः क्षेत्रपरायणः॥ ४०॥ तदा मयोपदिष्टोसौ महापाशुपतव्रती॥ क्षेत्रया
त्राहि तीर्थे यं मयोक्ता दंडपाणये॥ ४१॥ अतो दंडपतेः पूजा कर्तव्या पूर्तिकारिणी॥ पंचक्रोशात्मक
स्यैव लिंगस्य परमात्मनः॥ ४२॥ प्रदक्षिणमिदं कृत्वा जीवन्मुक्तो भवेन्नरः॥ देव्युवाच॥ ज्ञात्वापि श्र
द्धया देव न कुर्वंति प्रदक्षिणं॥ ४३॥ तत्केन हेतुना मर्त्या उपेक्षंते महाफलं॥ महादेव उवाच॥ अल्पपु
ण्यवतां देवी नपां डिस्यादिभिश्च वसा॥ ४४॥ तस्माद्धर्मे प्रयततां सिध्येत्सर्वं न चान्यतः॥ यत्र यत्र परि

रुज्यतेजनस्तत्रतत्रसुखमेधतेपुनः॥४५॥ साधनानिविद्धातितत्परोयेनतत्फलमवाप्नुयान्नरः॥ लौकि
केपरमवैदिकेथवापामरःपरमतत्वविन्तथा॥४६॥ मादकःपरममोदकोयथादीयतेकपटभार्ययायथा॥
मोहितोनचविचारयत्ययंजीवनंमरणमप्यहोवशी॥४७॥ एवमेकंकालकूटंइंद्रियंसर्वनाशकृत॥ नदे
वशोधितंयद्वद्विषमप्यमृतंभवेत्॥४८॥ जगत्तृणीकृत्यसकालमृत्युंआत्मानमायोज्यशिवेनयोगैः॥ अविघ्न
मेवंस्वमलंविसृज्यशरीरसंज्ञंमलखंडभांडं॥४९॥ मुक्तोभवेदेषनचान्यथैवमर्त्यःप्रसादान्ममचैवमु
क्तः॥ कःकर्तुमेवंप्रभवत्यविघ्नंकलौमनुष्योबहुदोषयुक्तः॥५०॥ अथापिमद्भक्तियुतोविमुक्तस्तद्भक्तियु
क्तःसकलैश्चभावैः॥ पूर्वोदितादप्यतिदुःशकोयंविमोहनार्थैरखिलैश्चशास्त्रैः॥५१॥ बीभत्सितेदुर्विष
येकदाचिद्योवाऽनुरागोभवितानरस्य॥ सचेद्भविष्येत्परमात्मनीशेकोनामयुक्तोनभवेद्भवाब्धेः॥५२॥ अ
विमुक्तंममक्षेत्रंअविमुक्तेश्वरंशिवं॥ अविमुक्तजनंशांतंसेवंतेयेधृतव्रताः॥ ५३॥ विमुक्ताःपरमानंदेपदे
स्थितिमुपागताः॥ अनेकजन्मसुमहत्साधनैर्ज्ञानमुत्तमं॥५४॥ प्राप्नुवंतितदेकेनजन्मनासाधुवासिनः॥

अष्टांगादिभिरन्यैश्च तपोयज्ञादिभिः सदा ॥ ५५ ॥ साधिते पाक्षिकी सिद्धिरविमुक्ते निरर्गला ॥ अविमुक्ता स्पृरो योगे ज्ञानंदानं जपस्तपः ॥ ५६ ॥ क्षेत्रतीर्थादिनियमान संतिशुभदर्शिनां ॥ अविमुक्तं समासाद्य नत्यजेन्मोक्षकामुकः ॥ ५७ ॥ क्षेत्रन्यासदृढं कृत्वा वसेद्धर्मपरः सदा ॥ क्षेत्रन्यासपराणां त्वमहमप्यनुकूलजैः ॥ ५८ ॥ भोगैः सहायतां यातो दिशावः परमांगतिं ॥ यथापतिव्रता नारी भर्तारमनुगच्छति ॥ ५९ ॥ तथा सा हि समालब्य काशीमनुगतो भवेत् ॥ गुरुद्रोहपरो यस्तु विप्रद्रोहपरस्तथा ॥ ६० ॥ न तस्य काशी सिध्येत बहुभिः साधनैर्युता ॥ क्षेत्रसंन्यासिनामेवं क्रमः प्रोक्तो मयानघे ॥ ६१ ॥ प्रदक्षिणा यास्तु महान्महापापहरः परः ॥ ६२ ॥ इति श्री ब्रह्मवैवर्त्ते महापुराणे तृतीयविभागे पंचक्रोशीमहिमावर्णनं नाम पंचमोध्यायः ॥ ५ ॥ समाप्तः ॥

॥ वाराणसीप्रसादस्य नियोगेन प्रयत्नतः ॥ काशी संस्कृतमुद्रायामंकितोयं शिलाक्षरैः ॥ १ ॥ श्री काशीजी में ज्ञानवापी के पूर्व फाटक पर श्री विश्वनाथजी के पास महाराज शिवलाल दुबेजी इनके मकान में काशी संस्कृत मुद्रा यंत्र में छपी जिनको लेना होय उन्हों ने इस कार्य के संपादक श्रीयुत बाबू वाराणसीप्रसादजी इनके पास मिलेगी

